॥ ॐ ॥

# श्री विवेक-चिन्तामणि

श्री मत्परम हंस परिव्राजकाचार्य श्री श्री १०८ श्री उत्तमनाथ जी महाराज जी के मुख्य शिष्य श्री विवेकनाथ जी महाराज विरचित तथा प्रकाशक

जिसको—

पं० नरहरि नाथ जी योगी और श्री श्री विवेक नाथ जीमहाराज के शिष्य निरञ्जन नाथ ने संशोधन किया।



प्रथमावृत्ति | वि० संवत् २००५ वैशाख | मूल्य २)

# भूमिका

इस वर्तमान समय में अधिकांश लोगों के चित्त में यह ख्याल दृढ़ जम गया है कि, तीर्थ, व्रत, पूजा, पाठ, स्नान, दान, सगुण देवी, देवताओं का पूजन, नित्य नियमादिक, केवल ढकोसला मात्र है। इस विपरीत बुद्धि का कारण तो वर्तमान काल में वेद विद्या को भुला कर विदेशी विद्याओं का पढ़ना तथा विदेशी धर्मों के संस्कार उनके हृदय से पुनः पुनः स्फुरण होना ही एक मुख्य हेतु है। क्योंकि ऐसा न होता तो हमारे वेद, स्मृति, पुराण, इतिहास तो तीर्थ व्रत, दानादिक की महिमा से भरे पड़े हैं, ऐसे कल्याण कारी सद् ग्रंथों के विद्यमान भी मनुष्यों को मुक्ति प्रद धर्म मार्ग में ऐसी अश्रद्धा क्यों होती। परंतु इस समय उन धार्मिक ग्रंथों को प्रायः थोड़े ही सज्जन पुरुष श्रद्धा भक्ति पूर्वक पढ़ते सुनते हैं।

और बिना पढ़े सुने उनके भीतर लिखे हुए उत्तम रहस्य का क्या पता लगे क्योंकि "श्रुत्वाधर्मविजानीयात" अर्थ—धर्मसुनने से जाना जाता है।

जब वेद शास्त्र नहीं सुनेगा तो धर्म के स्वरूप को भली प्रकार मनुष्य कैसे जान सकेगा, और धर्म के जाने बिना धर्म परायण होना असंभव है, और धर्म परायण हुए बिना अनेक जन्मों का मलीन हुआ अन्तःकरण शुद्ध होना कठिन है, और अन्तःकरण के शुद्ध हुए बिना भगवान में प्रेम नहीं लगता, और प्रेम के बिना भगवत प्राप्ति कैसे हो सकती है।

ऐसा विचार करके महाराज श्री श्री १०८ श्री विवेक नाथ जी ने यह विवेक-चिन्तामणि नामक पुस्तक लिखी है, इस में वेदस्मृति पुराण इतिहासों तथा निर्णयसिंधु आदि का सार संग्रह किया है. कि किसी प्रकार प्राणियों का कल्याण हो।

यद्यपि श्रुतिस्मृति पुराणादि की विद्वानों ने भाषा टीका भी करदी है। तथापि वे ग्रंथ बड़े होने के कारण और बहु मूल्य होने से साधारण मनुष्य अधिक व्यवहार में संलग्न उन ग्रंथों को न तो ले सकता है और न कहीं तीर्थ यात्रादि करते वक्त अपने साथ रख कर समयानुसार विषय को देख कर लाभ उठा सकते हैं।

और यह छोटी-सी जेब में रखने योग्य पुस्तक कम मूल्य सर्व शास्त्रों का सार संग्रह अधिक लाभ प्रद है।

इति श्री विवेकनाथ जी महाराज कृत अपने
भजन और धार्मिक विशय संग्रह समाप्तं

अथ श्री श्री १०८ श्री विवेकनाथ जी महाराज के शिष्य निरंजन नाथ कृत भजन और छन्द इस रीति से पुस्तक के सर्व पृष्ठांक की विपयानुक्रमणिका न देते हुए दिग्दर्शन रूप से ऊपरोक्त संक्षेप से प्रधान २ प्रकरण प्रगट किये हैं। ...........१६४

विनीत—
श्री श्री विवेक नाथ जी महाराज का
शिष्य निरंजन नाथ

ॐ अलख । गोरख । रख । ॐ

# ॥ राजगुरुवंशावली: ॥



आदिनाथं शिवं नत्वोदयनाथं च पार्वतीम् ।
ब्रह्माणं सत्यनाथं च विष्णुं सन्तोषनाथकम् ॥ १ ॥

शेषमचलनाथं च गजनाथं गणाधिपम् ।
पूर्णं चौरङ्गिनाथं च मत्स्येन्द्रं पार्वतीसुतम् ॥ २ ॥

अयोनिशङ्करं साक्षाद्गोरक्षं योगरक्षकम् ।
भवरत्नाकरे पोतान् योगरत्ननिधीन् नव ॥ ३ ॥

योगदग्धकषायाणां योगयज्ञनिषेविणाम् ।
योगिनामन्वयं वक्ष्ये राजगौरवशालिनाम् ॥ ४ ॥

आदिनाथः शिवः साक्षान्मत्स्येन्द्रो यस्य शिष्यताम् ।
अग्रहीत्तस्य गोरक्षः शिष्योऽभूद्यः शिवः स्वयम् ॥ ५ ॥

तस्मादुज्जयिनीनाथो दीक्षां लेभे हरि नृपः ।
तस्य विचारनाथस्य शिष्यवंशो गरीयसि ॥ ६ ॥

चटकानाथसिद्धोऽभूद्धठयोगैकनिष्ठितः ।
तस्य शिष्यप्रशिष्याद्याः क्रमशो राजगौरवम् ॥ ७ ॥
प्रपेदिरे समं सिद्धा श्रुतिस्मृत्यनुगामिनः ।
तत्र वंशे वनानाथस्तच्छिष्यो नवलो वशी ॥ ८ ॥
श्रीमन्नवलनाथस्य नव शिष्या निरंहसः ।
नवनाथनिभा भामि भूषिता भुवने प्रभुः ॥ ९ ॥
उत्तमो नागनाथश्च रामनाथोऽथ नैगमः ।
नियमो मेघनाथश्च ततो नरवरो वरः ॥ १० ॥
निर्मलो भीष्मनाथश्च भीष्मव्रतपरायणः ।
उत्तमस्येन्द्रनाथश्च विरागश्च विवेकदृक् ॥ ११ ॥
विरागस्याभवल्लाभो विवेकस्याथ शिष्यकाः ।
रूपो निरञ्जनो लाडः शङ्करः शङ्करप्रियः ॥ १२ ॥
सर्वे वेदान्तयोगाभ्यां पक्षाभ्यां खेचरा इमे ।
सर्वलोकहितार्थाय दत्तचित्ता दिवानिशम् ॥ १३ ॥
सामान्येन समाख्याता विशेषेण विवक्षया ।
अथोपक्रममादध्मो ध्मातनिर्धूनितांहसाम् ॥ १४ ॥
स राजा विक्रमज्यायानभून्नाम्ना हरिः पुरा ।
पुत्रवद् भरणाज्जातः प्रजानां भर्तृशब्दभाक् ॥ १५ ॥

समुद्रमेखलामूर्वीमेकच्छत्रधरोऽशिषत् ।
क्षितिपालकुलै मौलिस्रजा यत्पदमञ्चितम् ॥ १६ ॥

भानुमत्या वियोगेन प्रेयस्याः स्वकृतागसा ।
अभिषिच्यानुजं वीरं विक्रमादित्यमत्यगात् ॥ १७ ॥

असारं वीक्ष्य संसारं सारजिघृक्षयाऽक्षयम् ।
गोरक्षं त्र्यक्षमध्यक्षं सिद्धानां शरणं ययौ ॥ १८ ॥

दक्षिणेन क्षणार्द्धेन दीक्षादक्षेण दीक्षितः ।
गोरक्षेण हरी राजा मृत्युञ्जयपदं ययौ ॥ १९ ॥

भाष्याब्धौ सेतुमातेने क्षाराब्धौ राघवो यथा ।
समं वाक्यपदीयेन जुगुम्फ कारिकावलीम् ॥ २० ॥

नीतिशृङ्गारवैराग्यविज्ञानादीनि भूरिशः ।
शतकानि ततानासौ बिभ्रदुच्चै ऋतम्भराम् ॥ २१ ॥

असारं सकलं सारो योगेनात्मावधारणम् ।
विचारेण विनिर्मुक्तो विचाराख्यां ततो दधौ ॥ २२ ॥

चटकानाथनामा यो योधभूपगुरुर्वशी ।
त्रिकालज्ञस्त्रिवेदज्ञस्त्रिगुणातीतविग्रहः ॥ २३ ॥

चटकानाथवाक्येन चटकाचलमूर्धनि ।
योधश्चक्रे महद्दुर्गं योधपुर्याः शिखामणिम् ॥ २४ ॥

योगसिद्धिप्रभावेण येन पातालतो जलम् ।
गवामर्थे समुन्नीतं चटकानाथयोगिना ॥ २५ ॥

चटकाचलवासिन्यो यदहिंसाप्रतिष्ठया ।
वीतशङ्काः समं चेरु मृगेन्द्रै मृगजातयः ॥ २६ ॥

समसंख्यां समालोक्य गवां सिंहै स्तदन्तिके ।
निर्जग्मुः शुल्कला स्वेच्छा व्रीडिता नतिपूर्वकम् ॥ २७ ॥

आसीदाजन्मयोगाग्निभस्मसात्कृतकल्मषः ।
त्यक्तगोरक्षनाथाङ्घ्रिध्यानामृतरसालसः ॥ २८ ॥

वनानाथो महायोगी सिद्धसिद्धान्तपारगः ।
अजपाजपोपाशेन कीनाशः पाशितोऽमुना ॥ २९ ॥

पुरा योधपुरे येन युद्धविद्याविशारदः ।
तख्तसिंहो महीपालः पालितो योगविद्यया ॥ ३० ॥

तख्तसिंहौरसो राजा यशस्वी सिंहविक्रमः ।
पौरुषाम्भोधिमन्थाद्री राजश्रियं प्रशासितः ॥ ३१ ॥

यत्पादाब्जरजःस्पर्शपूतमौलि महीपतिः ।
नोन्नतं नमयामास मौलिं लेखाधिपेऽपि सः ॥ ३२ ॥

वनानाथमनाथानां नाथं नाथपदे रतम् ।
आश्रितो नाश्रितांश्चक्रे नाथहीनानसौ नृपः ॥ ३३ ॥

घनानाथे महीमेतां नाथयत्यभितः प्रजाः ।
प्रफुल्लाः फलनम्राश्च वसन्ते वीरुधो यथा ॥ ३४ ॥

नानाशास्त्रकथाश्चक्रे चक्रपाणि र्यथार्जुने ।
स योगी योगतत्त्वज्ञो जिज्ञासूनां समागमे ॥ ३५ ॥

समाधौ ध्यायमानस्य स्वात्मानं तस्य योगिनः ।
निर्जगाम महाकालः कलयन् सकलाः प्रजाः ॥ ३६ ॥

आसी त्तस्य पदाम्भोजवरिवस्यापरायणः ।
योगी नवलनाथाख्यः शिष्यः शिष्यगुणाकरः ॥ ३७ ॥

बाल्येऽपि कलयामास कौशलं कुशला द्गुरोः ।
समाधौ शास्त्रसंधे च ज्ञाननाथ इवात्मवान् ॥ ३८ ॥

मेधा मेधाविन स्तस्य श्रूये मेधातिथेर्यथा ।
सकृदुक्तं सुजग्राह गहनाद् गहनं परम् ॥ ३९ ॥

स्वल्पेनानेहसा तेन कलिता ललिता गुणाः ।
सुबुद्धे र्गुरुभक्तस्य दुष्करं किं जगत्त्रये ? ॥ ४० ॥

वारां तीर्थे गिरां तीर्थे गुरुतीर्थे गरीयसी ।
यस्य भक्ति स्तस्य मुक्तिपदवी न दवीयसी ॥ ४१ ॥

अष्टादशपुराणानां वक्ता सूत इवापरः ।
अष्टादशस्मृतीनांश्च तत्त्वान्वेषणपेशलः ॥ ४२ ॥

तस्य कण्ठे कृतावासा हरिकण्ठे रमा यथा ।
त्रयी त्रिभुवनं चक्रे तापत्रयविवर्जितम् ॥ ४३ ॥

भविष्याख्ये पुराणेऽस्मिन् भविष्याख्यानयेशते ।
श्रीमन्नवलनाथोऽयं नवलं भाष्यमातनोत् ॥ ४४ ॥

धीरे भद्रे सदादाने मिलिन्दा इव दुर्गताः ।
नवले सति सुच्छाये श्रिता मुमुदिरे जनाः ॥ ४५ ॥

गोरक्षाङ्घ्रिसरोजन्ममकरन्दमदालसः ।
स मन्दगुञ्जितेनैव मदयामास धार्मिकान् ॥ ४६ ॥

धन्वन्तरिमिवासंस्त धन्वदेशगता प्रजा ।
निजामृतरसेनामुं मार्जयन्तं रुजांव्रजम् ॥ ४७ ॥

योगविद्यायमासाद्य यमाद्यष्टाङ्गसुन्दरी ।
नान्यस्मै स्पृहयामास लता कल्पद्रुमं यथा ॥ ४८ ॥

वेदान्ते दान्तसर्वाक्षो याज्ञवल्क्य इवापरः ।
औशनस्यां प्रगल्भोऽसौ गाम्भीर्ये पाथसांनिधिः॥ ४९ ॥

अक्षपादं हेतुवादी सांख्यो देवहुतीसुतम् ।
याजको जैमिनिं मेने शाब्दिकः फणिनां पतिम् ॥ ५० ॥

वाग्मी वाचस्पतिं मेने शैलूषो भरतं मुनिम् ।
नवो नवलनाथाख्यं मन्यतेस्म नवं नवम् ॥ ५१ ॥

उत्तमो नियमो यस्य शिष्यतामग्रहीदहो ।।
श्रीमन्नवलनाथस्य के वयं गुणवर्णने ? ॥ ५२ ॥

गम्भीरे सरसे स्वच्छे मानसे तस्य योगिनः ।
वीतशङ्कं कृतावासौ राजहंसौ यथा शिवौ ॥ ५३ ॥

योगभास्वत्तमध्वान्ते स्वान्ते तस्य मनस्विनः ।
विस्तारमगमच्छास्त्रं तैलबिन्दुवदम्बुनि ॥ ५४ ॥

श्रीमन्नवलनाथस्य नवनाथनिभद्युतेः ।
नवखण्डपरं याता नवकीर्तिलतावतिः ॥ ५५ ॥

तमेतं गुरुमासाद्य गुरुभक्तो गुणाग्रणीः ।
गङ्गासिंहो भुवो भर्ता भास्करान्वयभूर्वभौ ॥ ५६ ॥

वैक्रमे नगरे रम्ये राजस्थानशिखामणौ ।
विदेहो याज्ञवल्क्येन वसिष्ठेन रघूद्वहः ॥ ५७ ॥

नलः सुमतिना यद्वद् व्यासेनेव युधिष्ठिरः ।
गुरुणा गुरुणेवेन्द्रो रेजे राजा सभागृहे ॥ ५८ ॥

मङ्गलेनाथ शुक्रेण बुधेन गुरुणा तथा ।
राजेव विरजा राजा रेजे राजासनं गतः ॥ ५९ ॥

श्रीमन्नवलनाथस्य कृपादृष्टिनिपाततः ।
राजन्यजन्यविजयी गङ्गासिंहो जहौ भियम् ॥ ६० ॥

गजवाजिव्रजेऽप्याजौ ज्यायोघैं राजकं जितम् ।
प्रजानामरिजा भीति रुतस्मिन् राजनि नाजनि ॥ ६१ ॥

श्रीविक्रमपुरं रेजे पुरन्दरपुरं यथा ।
पुरन्दरनिभे राज्ञि गङ्गासिंहे प्रशासति ॥ ६२ ॥

लोकालोकाय राजानमुदेष्यन्तं निजश्रिया ।
पद्मिनीवानुरक्तार्कं विललास सुखं प्रजा ॥ ६३ ॥

नभोदितौषधीनाथे यथा तस्मिन् कलाधरे ।
आधिव्याधिविमुक्तानां प्रजानामुत्सवोऽभवत् ॥ ६४ ॥

ईतिव्यालीविलीनास्मिन् विनतानन्ददायिनि ।
द्विजानामाश्रये वीरे सुपक्षे हरिवाहने ॥ ६५ ॥

वीरे तस्मिन् महीपाले वीरभोग्या वसुन्धरा ।
वसुभि तर्पयामास पयोभिः सुरभिर्यथा ॥ ६६ ॥

सगरः सागरं चक्रे गङ्गां चक्रे भगीरथः ।
गङ्गासिंहोऽस्मि तद्वंशोऽगङ्गामेव समाश्रये ! ! ॥ ६७ ॥

तेन त्रिपथगानीता शान्तुं द्रावयाम्यहम् ।
पितरः पाविता एतेन पुत्रादीन् पावयाम्यहम् ॥ ६८ ॥

पर्जन्या निर्वैमेकास्ते निर्विमेका निदीनदाः ।
शैलमाला स्वनूपेषु वर्षन्ति च वदन्ति च ॥ ६९ ॥

इति मत्वा महीपालः पालयन्निखिलाः प्रजाः ।
शतद्रुं द्रावयामास मारवीषु स्थलीष्वहो ! ॥ ७० ॥

महसा सहसा प्लुष्टाः सागराः कापिलेन ते ।
गङ्गयाङ्गीकृता स्तापं हित्वा प्रापु र्यथा सुखम् ॥ ७१ ॥

चण्डमार्तण्डविप्लुष्टा राजस्थास्थिताः प्रजाः ।
शतद्र्वा चिररात्राय सिक्ताः शान्तिं तथाययुः ॥ ७२ ॥

वैक्रमं नगरं पाति विक्रमादित्यसन्निभे ।
विक्रमैकरसे राज्ञि विक्रमं न ययु र्द्विषः ॥ ७३ ॥

सिंहैः साकं कृता क्रीडा गङ्गासिंहेन भूभुजा ।
गौराङ्गा भङ्गमाजग्मुः सङ्गरेषु यदीक्षणात् ॥ ७४ ॥

शूरे तस्मिन् समुदिते पेचका इव वञ्चकाः ।
चौराश्च वैरिण श्चैव कान्दिशीका दिशो ययुः ॥ ७५ ॥

ऊषरामुर्वरामुर्वी कान्तारं कान्तकाननम् ।
चकार मारवं वीरो रम्यं राजीवराजिभिः ॥ ७६ ॥

सुपुष्पा फलभाराढ्या यस्मिन् राजनि भूरभूत् ।
शुद्धवर्णा व्यराजन्त नवे चित्रपटे यथा ॥ ७७ ॥

स्वनाम्ना कारयामास गङ्गानगरमद्भुतम् ।
यत्र मन्दिरशृङ्गेषु विश्राम्यन्ति बलाहकाः ॥ ७८ ॥

शार्दूलं जनयामास शार्दूलेन समं गुणैः ।
शार्दूलैकविलासोऽसौ गङ्गासिंहः सतां गतिः ॥ ७९ ॥

लालितं चरणद्वन्द्वं क्षितिभृन्मौलिमालया ।
श्रीमन्नवलनाथस्य विपन्नशरणं बभौ ॥ ८० ॥

श्रीमन्नवलनाथास्यविधुमण्डलसम्भवम् ।
उपदेशामृतं पीत्वा नामृते सस्पृहो नृपः ॥ ८१ ॥

समाः पञ्चगुणाः पङ्क्तिरत्नारमश्नतोऽशनम् ।
शनैरासेवमानस्य योगं समयुरञ्जसा ॥ ८२ ॥

प्रत्याहाराङ्कुशाकृष्टो धारणानिश्चली कृतः ।
ध्यानामृतरस स्तस्य समाधिस्थो मनोगजः ॥ ८३ ॥

मूलबन्धे जगन्मूलमुन्मूलितमनेन हि ।
जालन्धरे जगज्जालं खेचर्या खे चचार सः ॥ ८४ ॥

स कुण्डली कुण्डलिनीं सुप्तामात्मगुहागृहे ।
योगेन बोधयामास संविवेश तया सह ॥ ८५ ॥

जाग्रदेव स सुष्वाप कुर्वन्नेव चकार न ।
शृण्वन्नेव न शुश्राव पश्यन्नेव ददर्श न ॥ ८६ ॥

शिवं नवलनाथन्तु गङ्गासिंहं भगीरथम् ।
लोककल्याणकारित्वा न्मन्यतेस्माखिला प्रजा ॥ ८७ ॥

श्रीमन्नवलनाथ स्योत्तमः सर्वगुणोत्तमः ।
लोकाभिरामो रामश्च नियमो नियमादिमान् ॥ ८८ ॥

त्रय स्त्रिविक्रमस्येव विक्रमा त्रिपुलक्रमाः ।
क्रमाच्छिष्याः शमोयेता जाता वहुमताः सताम् ॥ ८९ ॥

श्रीमदुत्तमनाथोऽसौ गुरुपादाब्जषट्पदः ।
सर्वाण्यधिजगामामेध्यः शास्त्राण्यल्पैरहर्गणैः ॥ ९० ॥

वेदान्ता विविशु स्तस्य मानसं वीतकल्मषम् ।
धर्ममेघागमे काले राजहंसा इवाभितः ॥ ९१ ॥

विरक्तस्य जगज्जालाद्गुर्वाज्ञामार्गवर्तिनः ।
श्रीमदुत्तमनाथस्य गोरत्ते प्राविश न्मनः ॥ ९२ ॥

साङ्गमङ्गीचकारासावादिनाथादिसेवितम् ।
योगमार्गं महायोगी जगौ गीतां च पेशलम् ॥ ९३ ॥

वीतरागस्य दान्तस्य योगदग्धाखिलांहसः ।
लोकसंग्रहकामस्य परार्थैका क्रियाभवत ॥ ९४ ॥

न यशोलब्धये येन रञ्जिताः प्राकृता जनाः ।
हन्तारो रुद्धवाग्वज्रै रिपवोऽपि प्रसादिताः ॥ ९५ ॥

श्रीमदुत्तमनाथेन कथास्तथ्यास्तथा कृताः ।
याभि र्यया जनस्तोषं चक्र श्चन्द्रांशुभि र्यथा ॥ ९६ ॥

जनचक्रव्रजाल्हादे तस्यास्यविधुमण्डले ।
विलासं चक्रिरे स्वैरं श्रुतयः स्मृतयः श्रिताः ॥ ९७ ॥

वेदान्ते रममाणस्य दिवसा निमिषा इव ।
योगिन स्तस्य निर्जग्मुः शिष्यैरासेवितस्य च ॥ ९८ ॥

रामनाथो यथा रामो दृढो गुर्वनुशासने ।
भूयिष्ठा योगवाशिष्ठे श्रद्धा बद्धाऽस्य योगिनः ॥ ९९ ॥

नियमो नियमोपेतो वैद्यविद्याविशारदः ।
सद्यो हृद्यागदैराद्यै र्नुनोद गदमक्षरम् ॥१००॥

अजपाथा जजापासौ यज्ञाद्यं मानसं जपम् ।
योगिनो मोक्षमाजग्मु र्यं गायन्तो गतैनसः ॥१०१॥

नेमिनाथो नेमिनाथो यथा तन्त्रविचक्षणः ।
देशिकादेशनित्यश्च रथनेमिस्वरापगा ॥१०२॥

महेन्द्रश्च विरागश्च विवेकश्च विवेकिनः ।
त्रयश्चोत्तमनाथस्य शिष्या स्त्रैविद्यवेदिनः ॥१०३॥

सरहस्येषु साङ्गेषु वेदेषु स्मृतिशालिषु ।
महेन्द्रनाथो विख्यातो महेन्द्र इव सत्वरम् ॥ १०४ ॥

विवेकश्च विरागश्च षट्सम्पत्तिमुमुक्षुते ।
वैराग्यनाथमाश्रित्य चारित्राध्र्यमुपागताः ॥१०५॥

वैराग्यनाथं शास्त्राणि पर्यांसीव पयोनिधिम् ।
अनिशं वर्धयामासुः समन्ता च्छान्तचेतसम् ॥१०६॥
आत्मलाभैकतुष्टेन लाभो लब्धो महानयम् ।
विरागेणापि यत्कीर्त्या भरिता हरितोऽखिलाः ॥१०७॥
गुरुमुत्तममासेव्योत्तमं ब्रह्म समाश्रितम् ।
लब्धो वैराग्यनाथेन योगो वैराग्यशालिना ॥१०८॥
यमाश्रित्य यमाद्धीता गीतादिश्रवणादराः ।
दारागारादिनिर्विण्णा विविशु र्ब्रह्मणः पदम् ॥१०९॥
तीर्थे तीर्थस्वरूपे च तीर्थसेवनतत्परे ।
उत्तमे चोत्तमा भक्ति र्विवेकस्य विवेकिनः ॥११०॥
श्रीमदुत्तमनाथाङ्घ्रिभाजि नाथे विवेकिनि ।
शिश्रिये प्रश्रयोपेते सममेव श्रिया श्रुतम् ॥१११॥
विवेकनाथेहर्यक्षे धीरं गर्जति संसदि ।
निमदाः प्रपलायन्ते द्विरदा इव वादिनः ॥११२॥
मन्त्रोपनिषदां सद्म च्छद्मार्जहृत् पुराविदः ।
समञ्जसैः समं सङ्गः संस्तवोऽपृथग्जनैः ॥११३॥
निरञ्जनाश्रितस्यास्य निरञ्जनमनोश्रियः ।
निरञ्जनजने न्यायो निरञ्जनमभूद्यशः ॥११४॥

शङ्करप्रेयसस्तस्य गोरक्षेऽपि शिवात्मनि ।
शिवसङ्कल्पमाविष्टं विवेकस्य मनोऽनिशम् ॥११५॥

सर्वशास्त्रेषु कुशलो विवेको योगिनां वरः ।
विस्मरुर्जनाः सर्वे यस्मिन् प्रवचनोन्मुखे ॥११६॥

चन्द्रोदये चन्द्रकान्तो द्रवतीति न के विदुः ? ।
इदं तु महदाश्चर्यं तस्मिंश्चिन्तामणेर्द्रवः ! ॥११७॥

विवेकेन विवेकेन विवेकेन विवेकिभिः ।
विविक्तं सुविविक्तं तद्विविक्तं ब्रह्म तत्त्वमोम् ॥११८॥

शेषोऽप्यशेषरूपेण महतां चरितं महत् ।
नालं वर्णयितुं तत्र मानवानां कथैव का ? ॥११९॥

दाने कर्णः श्रिया कामः श्रिया विष्णुः श्रुते गुरुः ।
बले शक्रो रणे रामो यमः क्रोधे धृतौ गिरिः ॥१२०॥

गाम्भीर्ये पाथसां नाथो नये कृष्णो जयेऽर्जुनः ।
क्षमायां क्षमया तुल्यो वात्सल्ये जननीसमः ॥१२१॥

प्रजाभूतौ भर्तृहरि विक्रमे विक्रमोपमः ।
गङ्गासिंहःपिता यस्य प्रतापे तपनोपमः ॥१२२॥

तत्तुल्ये नृपशार्दूले शार्दूलेऽस्मिन् बलोर्जिते ।
पालयत्यवनीमब्दे वेदखाभ्रविषाणगे ॥१२३॥

छिप्रानाथो विश्वनाथश्च यस्य ।
दीक्षांशिक्षादेशिकौ योगिराजौ ।
खन्नापुर्या, शारदापीठपाठी,
स व्यातेने, राजगुर्वन्ववालिम् ॥१२४॥
सपादशतकं श्लोका लोकालोकाय लोक्तः ।
सुश्लोकानां शुभश्लोका लोकयन्तु कृता बुधाः ! ॥१२५॥

इति श्री नरहरिनाथयोगिकृता

※ राजगुरुवंशावलिः ※

॥ सम्पूर्णा स्वस्ति ॥



## ❀ नवश्लोकी ❀

जयति योगिवनेशदिनेश्वरो,
नवलनाथमनाथमनाथयत् ।
स च निजोत्तममानियमाभिधा,
दथ विवेकविरागनिरञ्जनान् ॥ १ ॥

नवलनाथपदाम्बुजसेविनां,
विनयिनां नयिनां च मनास्विनाम् ।
सविनया स्तनया दयिता हिता,
स्तुतमदा द्विरदाः सुरयाः हयाः ॥ २ ॥

नवलमङ्गलमूलकलालय,
कमलकोमलपादतलेऽचला ।
यदि रति र्विरतिः सुरतिः स्मृतिः,
श्रुतिरतिः सुगति र्भवति स्थितिः ॥ ३ ॥

नवलनाथकलाः सकलाः कलौ,
हतवलौ नवलौकिकतावलौ ।
पृथुबले सबले शबलेऽचले,
नयबले धरणीनवबल्लभे ॥ ४ ॥

श्रुतिशिखोदितमुत्तममुत्तमै,
रहरहः श्रवणै र्मननै र्धिया ।
हृदिधृतं धृतवान् धृतिमानसौ,
गुणगणोत्तमनाथ उदारधीः ॥ ५ ॥

गुरुगिरागिरिजागिरिशाश्रितो,
हिरिरिवाखिललोकविलोकनात् ।
रुचिररामविरामरतिः स्थिर,
श्चरति राम इति श्रुतिपद्धतिम् ॥ ६ ॥

नियमनाथ उदारविचारवान्,
नियमता यमपाशमपाकरोत् ।
गदव्रजामगदं विमलां मतिं,
यतिरय न्तिरय न्नितमिरं ददौ ॥ ७ ॥

विवेकवैराग्ययुगेन सम्पदा,
मुमुक्षुता यस्य मनोगृहे स्थिता ।
स्थितौ किमास्था स्यगिताऽस्थिरस्य नो,
विरागनाथेन वदन्तु वादिनः ? ॥ ८ ॥

विविच्य बुद्ध्यैव विचारसागरं,
विवेकचन्द्रोदयमुज्जहार यः ।

विवेकिनामात्मवतां समागमे,
विवेकनाथोऽयमतीव पण्डितः ॥ ९ ॥

शिष्यो विवेकनाथस्य नाथास्नाम्ना निरञ्जनः ।
नवनाथा नवश्लोकैः प्रसीदन्तु नमाम्यहम् ॥ १० ॥

निरञ्जननाथनिर्मिता
नवश्लोकी
पूर्णा

## ❋ शिवम् ❋

किं छन्दो ललितं गुणैर्धवलितं ? शार्दूलविक्रीडितम् ।
किं व्योम्नि स्थितमद्भुतं वलभृतां ? शार्दूलविक्रीडितम् ।
किं वन्येषु मनोहरं धृतिमतां ? शार्दूलविक्रीडितम् ।
किं भूपालरणाङ्गणेषु रुचिरं ? शार्दूलविक्रीडितम् ॥ १ ॥

प्रल्हादः स्मरणाच्छुक प्रवचनाच्छ्रुत्या परीक्षित पृथुः ।
पूजायाः पदसेवनाज्जलधिजा, वातात्मजो दास्यतः ।
अक्रूरो नमनान्नरः सखितया, कंसो भयाद् गोपिकाः ।
कामादात्मनिवेदनाद् बलिरगा, न्मुक्तिं तयस्तंस्तुमः ॥ २ –

# ❋ दिग्दर्शनम् ❋



तस्मिन् काले द्विजः कश्चि जयन्तो नाम विश्रुतः ।
तत्फलं तपसां प्राप्तं शक्रतः स्वगृहं ययौ ॥१॥

जयन्तो भर्तृहरये लक्षस्वर्णेन वर्णयन् ।
भुक्त्वा भर्तृहरि स्तत्र योगारूढो वनंययौ ॥२॥

विक्रमादित्य एवास्य भुक्त्वा राज्यमकण्टकम् ।
शतवर्षं मुदा युक्तो जगाम मरणे दिवम् ॥३॥

भविष्यपुराणे प्र. ख प ३ अ. २३ पृ. २५

महाराजा भर्तृहरि के राज्यकाल में एक जयन्त नाम का ब्राह्मण वन में तप करता था। प्रसन्न होकर इन्द्र ने फल दिया। ब्राह्मण ने एक लाख सुवर्ण मुद्रा लेकर महाराजा को दे दिया। महाराजा उसे खाकर योगारूढ हो अपने सिंहासन पर विक्रमादित्य को अभिषिक्त कर वन को चले गये (गोरक्षनाथजी के साथ) विक्रमादित्य ने सौ वर्ष तक अकण्टक राज्य किया।

## ❀ अथ नेपाल वृत्तान्त ❀

—:०:—

शत्रुर्नगरीं सर्वां हिमतुङ्गोपरिस्थिताम् ।
गुप्तां गोरक्षनाथेन(पालितांगोरखाख्येन)योगिनाभक्तकारणात्

अत्यहं बलवाञ्छूरो हत्वा शूरसहस्रकम् ।
सायं काले गृहं आव्य योगिनं तमपूजयत ॥२॥

पूजनात्स प्रसन्नात्मा सैन्यमुञ्जीव्य भूपतेः ।
दत्वा गजबलं तेभ्यः पुनर्योगं करोति वै ॥३॥

गोरक्षं (गोरखं) योगिनं नाम पराजित्य रुनूत्यतः ।
पुनर्युद्धं कुरुत्वं वै ततो जयमवाप्स्यसि ॥४॥

इत्युक्त्वा तेहि कृष्णाद्याः कृत्वा योगमयं वपुः ।
प्रातःकाले ययुस्ते वै मन्दिरं तस्य योगिनः ॥५॥

तदर्थी हृदये कृत्वा गोरक्षः सर्वयोगवान् ।
वरं वरय तानाह ते तच्छ्रुत्वाऽब्रुवन् वचः ॥६॥

नमस्यामो वयं तुभ्यं यदि देयो वरस्त्वया ।
देहि सञ्जीवनीं विद्यामाल्हादाय महात्मने ॥७॥

इति श्रुत्वा हृदिध्यात्वा तानुवाच प्रसन्नधीः ।
विद्या सञ्जीवनी तुभ्यं वर्षमात्रं भविष्यति ॥८॥

तत्पश्चा न्निष्कली भूत्वाऽऽगमिष्यति मदन्तिकम् ।
अद्यप्रभृति भो वीर ! मया त्यक्तमिदं जगत् ॥९॥
यत्र भर्तृहरिः शिष्यस्तत्र गत्वा शये ह्यहम् ।
इत्युक्त्वान्तर्हिता योगी जग्मुस्तेरणमूर्धनि ॥१०॥

भविष्यपुराणे पृ. १०५ प्र. स. प. ३ अ. १२

पाण्डव यादवों के अंशावतार आल्हा उदल आदि वीरों ने भक्तभयहारी भगवान् गोरक्षनाथजी के द्वारा परिपालित तुङ्ग हिमालय पर विराजमान नेत्रपाल (नेपाल) नगरी को चारों ओर से घेर लिया । तुमुल संग्राम होने लगा । शूरवीर महाराजा नेत्रसिंह (इसी के नाम से नेत्रपाल नेपाल नाम पड़ा) प्रति दिन सहस्रों शूरों के मारने के अनन्तर सायंकाल घर जाकर भगवान् गोरक्षनाथ जी की पूजा करते थे । पूजन से प्रसन्न होकर भगवान् राजा की सम्पूर्ण मरी हुई सेना को जीवित कर उन्हें एक एक हाथी का बल देकर युद्ध में भेजा करते । अन्त में आल्हा उदल की सेना समाप्त हो गई । उन्हों ने योगी का वेष बनाकर प्रातःकाल भगवान् गोरक्षनाथजी के मन्दिर में जा गान्धर्व विद्या से उन्हें प्रसन्न किया । अन्तर्यामी भगवान् गोरक्षनाथजी ने समाधि से सब कुछ पहले ही जान लिया था । मन्द २ मुसकराते हुए कहने

लगे—'वर माँगो!' यह सुन कर योगीरूपधारी वीरों ने प्रार्थना की—'हे प्रभो! आप को कोटि २ प्रणाम हैं, हम पर सङ्कट है रक्षा कीजिये सेना समाप्त है! हे आशुतोष! यदि हम वर के पात्र हैं तो महात्मा आल्हा उदल को सञ्जीवनी विद्या दीजिये! यह सुन कर थोड़ी देर हृदय में कुछ शोच कर प्रसन्न मन से कहने लगे—'तथास्तु, यह सञ्जीवनी विद्या एक वर्ष तुम्हारे पास रहेगी, फिर हमारे पास आजायेगी। हे वीरो! आज से हम वहां जा रहे हैं, जहाँ हमारा शिष्य भर्तृहरि है। इतना कह कर भगवान् गोरक्षनाथजी अन्तर्धान हो गये और वे वीर युद्धभूमि में गये।

स्कन्दपुराणे के ख. अ ४२ शिवाशिवसंवादे गोरक्षाश्रमवृत्तान्त

तस्माद् दक्षिणतो देवि! गोरक्षाश्रमरक्षकम्।
यत्र सिद्धो महादेवि! गोरक्षो वसतेऽनिशम् ॥ १ ॥
तल्लिङ्गन्तु प्रवक्ष्यामि शृणु पुण्यतमं स्थलम्।
महातप्तजलं तत्र वर्तते सर्वदैव हि ॥ २ ॥
तत्र स्थित्वा सप्तरात्रं जपन्वै शिवमुत्तमम्।
सिद्धो भवति देवेशि! यथा गोरक्ष उत्तमः ॥ ३ ॥

भगवान् शिव कहने लगे—'हे देवी! उस पूर्वोक्त पीठ से दक्षिण की ओर पवित्र और प्रसिद्ध गोरक्षाश्रम है।

हाँ पर सिद्धराज गोरक्षनाथ सदा निवास करता है। उस
हापीठ का चिन्ह बताता हूँ सुनो— वह बड़ा पुण्यतम
थल है, वहाँ अतितप्त जल का कुण्ड है, वहाँ पर कोई
विधिपूर्वक सात रात्रि रह कर शिव का जप करे तो हे देवेशि!
से हमारा स्वरूप गोरक्षनाथ उत्तम सिद्ध है। वैसा सिद्ध
। जाता है।

स्कन्दपुराणे के. ख अ. ४५ पृ. ४६ भिल्लाङ्गणपीठवर्णने

त्यनाथादयः सिद्धा अत्रैव जपतत्पराः।
सिद्धिं प्राप्ताः पुरा देवि! मादृशा स्ते न संशयः ॥ १ ॥

भगवान् शङ्कर जगदम्बा पार्वती से कहते हैं—
हे देवि! नित्यनाथादि (मत्स्येन्द्रनाथादि) सिद्ध प्राचीन
काल में इसी हिमालय के भिल्लाङ्गण पीठ में जप करते
हुए सिद्ध हो गये। वो सिद्ध मेरे समान हैं इसमें कोई
सन्देह नहीं!।

स्कन्दपुराणे के. ख. पृ. ४७ अ. ४६ त्रिशीर्षापीठवर्णनेमलगाक्षेत्र-
माहात्म्ये

न तस्य भयलेशोऽस्ति तिष्ठत स्तत्र पीठके।
शीघ्रं वै लभते सिद्धिं यथा गोरक्षकादयः ॥ १ ॥

उस प्रशान्त त्रिशीर्षापीठ में निवास करने वाले साधक

को लेशमात्र भी भय नहीं है और शीघ्र ही वह सिद्ध हो जाता है, जैसे गोरक्ष आदि सिद्ध हैं।

स्कन्दपुराणे के. ख. अ ७४ पृ ८२ सङ्गीतशास्त्रीयप्रकरणे

नव नाथाः समाख्याता स्तत्र श्रीआदिनाथकः ।
अनादिनाथः कूर्माख्यो भवनाथ स्तथैव च ॥ १ ॥
सत्यसन्तोषनाथौ तु मत्स्येन्द्रो गोपिनाथकः ।
गोरक्षो नव नाथास्ते(नव नाथास्तु में ख्याता)नादब्रह्मरताःसद
रसाः षड् वै समाख्याता स्तिक्ताम्लकटुकक्रमात् ।
मधुरक्षारलवणा रसा श्चेमे समीरिताः ॥ ३ ॥

नारद मुनि के प्रश्न करने पर भगवान् शिव उत्तर देते हैं— श्री आदिनाथ । अनादिनाथ । कूर्मनाथ । भवनाथ । सत्यनाथ । सन्तोषनाथ । मत्स्येन्द्रनाथ । गोपीनाथ । गोरक्षनाथ । ये नादब्रह्म में सदा लवलीन रहने वाले नव नाथ हैं ।

तिक्त । अम्ल । कटु । मधुर । कषाय । लवण । ये छः रस हैं ।

ब्रह्माण्डपुराणे उ. भा उप. पा. ४ अ. ३५ पृ २५० हयग्रीवागस्त्यसंवादे

तस्य चोत्तरकोणेतु वायुलोको महाद्युतिः ।
तत्र वायुशरीराश्च सदानन्दमहोदयाः ॥ १ ॥

सिद्धा दिव्यर्षय श्चैव पवनाभ्यासिनोऽपरे ।
गोरक्षप्रमुखा श्चान्ये योगिनो योगतत्पराः ॥ २ ॥
एतैः सह महासत्त्व स्तत्र श्रीमारुतेश्वरः ।
सर्वथा भिन्नमूर्तिश्च वर्तते कुम्भसम्भव ! ॥ ३ ॥
इडा च पिङ्गला चैव सुषुम्णा तस्य शक्तयः ।
तिस्रो मारुतनाथस्य सदा मधुमदालसाः

महामुनि अगस्त्य के प्रश्न का उत्तर देते हुए महाराजा हयग्रीव कहते हैं— 'हे कुम्भसम्भव ! उस कनकाचल सुमेरु के उत्तर कोण में तेजोमय वायुलोक है। वहाँ पर वायुमय शरीर वाले सिद्ध, देवर्षि, ब्रह्मर्षि, राजर्षि, पवनाभ्यासी तथा गोरक्षप्रमुख योगतत्पर योगिलोग सदा सच्चिदानन्द रस से तल्लीन रहते हैं। इन महायोगियों के साथ वहाँ पर महाबली रुद्रावतार यतिराज हनुमान् योग शक्ति से नित्य नई दिव्य मूर्तियों को धारण करते हुए निवास करते हैं। मारुतनाथ हनुमान् की इडा-पिङ्गला-सुषुम्णा, ये तीन योगशक्तियाँ सदा समाधि मधुमद में मस्त रहती हैं।

ब्राह्मण्डपुराणे उ.भा.उप पा.अ.३७ पृ.२४७ ललितोपाख्याने हृ अ.स,

नाथान्तरमिति प्रोक्तं हरत्रिंशतिरुन्नतम् ।
चतुर्नल्वप्रविस्तारं शाख्वत्सोपानमण्डितम् ॥ १ ॥

त्र नाथा महादिव्या योगशास्त्रप्रवर्तकाः ।
सर्वेषां मन्त्रगुरवः सर्वविद्यामहार्णवाः ॥ २ ॥

चत्वारो युगनाथाश्च लोकानामिह गुप्तये ।
सृष्टाः कामेशदेवेन तेषां नामानि मे शृणु ॥ ३ ॥

मैत्री इडीशषष्ठीश चर्याख्याः कुम्भसम्भव ! ।
तैः सृष्टा बहवो लोका रक्षार्थं पादुकात्मकाः ॥ ४ ॥

दिव्यविद्या मानवौघसिद्धौघाः सुरतापसाः ।
प्राप्त सालोक्यसारूप्यसायुज्यादिकसिद्धयः ॥ ५ ॥

महान्तो गुरव स्तांस्तु सेवन्ते प्रचरा गुरून् ।
अथ नाथान्तरालस्योपरिष्टाद् धिष्ण्यमुत्तमम् ॥ ६ ॥

हयग्रीव ने कहा— 'हे अगस्त्य ! बीस हाथ ऊँचा और चारनल्व (१६०० हाथ) चौड़ा पहले की न्याई सोपानों से मण्डित उसी सुमेरु पर्वत पर 'नाथान्तराल' नाम का महापीठ है। वहाँ पर योगशास्त्रों के प्रवर्तक, समस्त विद्याओं के महा समुद्र, सम्पूर्ण लोकों के मन्त्रगुरु, दिव्यशक्ति वाले सिद्ध नाथ निवास करते हैं। भगवान् कामेश्वर शङ्कर ने चारों युगों में चतुर्विध प्राणियों के चतुर्वर्ग की सिद्धि के लिए और त्रैलोक्य की रक्षा के लिए चार युगनाथों की सृष्टि की है। हे कुम्भयोने ! उनके

नाम ये हैं— मैत्रीश - उड्डीश - षष्ठीश - चर्येश, अर्थात मैत्रीशनाथ-उड्डीशनाथ-षष्ठीशनाथ-चर्येशनाथ, इन के नाम से कई मन्त्र-तन्त्र योग के ग्रन्थ भी मिलते हैं; जैसे 'उड्डीशतन्त्र' 'षष्ठीतन्त्र' आदि २ शिवसंकल्प सृष्ट इन चारों योगीनाथों ने बहुत से लोकों की रचना की है। जैसे दिव्यविद्या, देव, पितर, यक्ष, किन्नर, सिद्ध, गन्धर्व, मनुष्य, ऋषि, मुनि, तपस्वी आदि आदि इनकी रक्षा के लिए चरणपादुका के रूप में तत्तल्लोकों में वे चारों निवास करते हैं। इन की सृष्टि में अनेक सिद्ध योगी ऋषि मुनि सालोक्य-सारूप्य-सायुज्यादि सिद्धि वाले हैं। ये चारों महागुरु युगनाथ सम्पूर्ण कामनाओं के पूर्ण करने वाले हैं, अनेक योगी मुनि सिद्धगन्धर्व उनकी सेवा में रहते हैं। उसी नाथान्तराल महापीठ के उपर एक और दिव्यपीठ है।

माहिन्युवाच

श्रुतं कामोदकाख्यानं पापघ्नं पुण्यदं नृणाम्।
साम्प्रतं श्रोतुमिच्छामि कामाख्यायाः फलद्विज ॥ १ ॥

वसुरुवाच

कामाख्या परमादेवी पूर्वस्यां दिशि संस्थिता।
सागरानूपतटगा कलौ सिद्धिप्रदा नृणाम् ॥ २ ॥

यस्तत्र गत्वा कामाख्यां सम्पूज्य नियताशनः ।
तिष्ठेदेकां निशां भद्रे ! स पश्येत्तां दृढासनः ॥ ३ ।
सा देवी भीमरूपेण याति सन्दर्शनं नृणाम् ।
तां दृष्ट्वा न चलेद्यो वै स सिद्धिं वाञ्छितां लभेत् ॥ ४ ।
यस्तु दृष्ट्वा सुरेशानीं कामाख्यां भीमरूपिणीम् ।
आसनाच्चलितः सद्यः स विक्षिप्तो भवेद्ध्रुवम् ॥ ५ ।
तत्रास्ते पार्वतीपुत्रः सिद्धनाथो वरानने ! ।
उग्रे तपसि लोकैः स प्रेक्ष्यते न कदाचन ॥ ६ ।
कृतत्रेताद्वापरेषु प्रत्यक्षं दृश्यतेऽखिलैः ।
कलावन्तर्हितस्तिष्ठेद्यावत् त्पादः कलेर्व्रजेत् ॥ ७ ।
कलेः पादे गते चैकस्मिन् घोरे च धरातले ।
स वै प्रत्यक्षतां प्राप्य साधयेदखिलं जनम् ॥ ८ ।
मोहनाद्यैरुपायैस्तु म्लेच्छप्रायाङ्गनां स्तदां ।
कृत्वा वशे महाभागे ! शमयेत् त्रिपदं कलेः ॥ ९ ।
य स्तत्र गत्वा सिद्धेशं भक्तिभावसमन्वितः ।
चिन्तयेद् वर्षमात्रन्तु कामाख्यां नित्यदार्चयन् ॥ १०
स लभेद्दर्शनं स्वप्ने दर्शनान्ते समाहितः ।
सूचितां तेन सिद्धिं स लब्ध्वा सिद्धो भवेद् भुवि ॥ ११

विचरे त्सर्वलोकानां कामनाः पूरयन्छुभे ! ।
त्रिलोक्यां यानि वस्तूनि तानि संकर्षयेद् वरात् ॥ १२ ॥
स मत्स्यनाथः किल तत्र संस्थो, विज्ञानपारङ्गम एव भद्रे ! ।
चचार लोकाभिमतं विलत्वं, स्तपाऽतिघोरं नचयातिदृष्टिम् ॥
युगान्यनेकानि पुरा भ्रमित्वा, लोकान् समग्रानहतेष्टगत्या ।
तपःस्थितोऽद्यास्तिमहानुभावो, नकालवेगेन शुभेऽभिभूतः ॥ १४ ॥
गण्डान्तजास्तस्तु पुरा भयेऽभूद्, द्विजस्य कस्यापि सुतःसुभद्रे ! ।
सजातमात्रः किल पुष्कराख्ये, द्वीपेऽस्य पित्रा ह्युदधौ विसृष्टः ॥
प्रक्षिप्तमात्रं किल तत्र बालं, मत्स्योऽग्रसीत्कोऽपि विधेर्नियोगात्
तत्र स्थितोऽनेकयुगानि सोऽभू, त्काल प गत्या ह्यजरामराङ्गः ॥
ततः कदाचि त्प्रियया प्रदिष्टो, महेश्वरः सार्धमगप्रसूत्या ।
तत्त्वोपदेशाय जगाम भद्रे !, स लोकलोकाचलमप्रमेयः ॥ १७ ॥
तत्सौम्यशृङ्गे मणिभिः प्रदीप्ते, स्थित्वा क्षणार्धं हरिमग्नचेताः ।
देवीमुमां सम्प्रतिबोधशङ्कया, तालत्रयेणाप्यभिभूय सत्त्वान् ॥
उवाच तत्त्वं सुरहस्यभूतं, यद् द्वादशार्णार्थनिजस्वरूपम् ।
ततः तु सा शैलसुता महेशं, मारान्तकं यावदभिप्रणम्य ॥ १९ ॥
आज्ञाय तत्त्वं समवास्थिताऽभू, त्ताव त्स मत्स्य स्तु महार्णवस्थः
द्रुतं समुत्प्लुत्य जगाम शृङ्गं, यो विप्रबालो ह्युदरेऽस्य संस्थः ॥
स तत्त्वसिद्धोऽखिलत्व क्षमुक्तो ........................
..........................................................

निर्गम्य मत्स्योदरतः शुभास्ये, नमः प्रचक्रे भवयोःपुरस्तात् ।
विज्ञाततत्त्वोऽपि महेश्वर स्तं, पप्रच्छ तद्गर्भगतेर्निदानम् ।२१।
स वर्णयामास यथार्थमेव, तयोः पुरः सर्वमपि प्रवृत्तम् ।
आकर्ण्य तद्वृत्तमनु प्रसन्नः, सोमामहेशोऽनुनतिश्च कृत्वा ॥
तं कल्पयामास सुतं शुभाङ्गे, सोत्सङ्ग आस्थाप्य चुचुम्ब वक्त्रम्
सुतो ममायं किल मत्स्यनाथो, विज्ञाततत्त्वोऽखिलसिद्धनाथः ।
निजेच्छया सम्प्रति यातु लोका, न्कीर्ति वितन्वन् सुखमावयोश्च
ततःप्रभृत्येव सुतोऽम्बिकाया, लोकान् समग्रान् प्रविहृत्यकामम्
तत्र सिद्धपीठं समवाप्य तत्र, तपस्युपादिष्ट इवास्थितोऽस्ति ।
तं सिद्धनाथं मनसा विचिन्त्य, नरो भवेत्सिद्धसमस्तकामः ॥
सम्प्राप्य विद्यां निजवाक्प्रवाहे, निमज्जयेत् पण्डितवर्गजातम् ।
एतां कथां तस्य जगत्पवित्रां, शृणोतियः कर्णपथप्रयाताम् ॥
स चापि कामं समवाप्य भूमौ, स्वर्गं प्रयात्येव सुरार्चितांघ्रि ।
एतन्मया ते कथितं सुनेत्रे!, श्री सिद्धनाथस्य चरित्रमुक्तम् ॥
कामाक्षिमाहात्म्यमघघ्नमाद्यं, भूयोऽपि किन्ते प्रवदामिभद्रे ! ॥

नारदपुराणे बृ. उ. भा. व मो. सं सि. ना. च. शु. का मा. अ ६६.

मोहिनी ने कहा— हे द्विज ! पापों का नाश करने वाला और मनुष्यों के पुण्य की वृद्धि करने वाला हिमालयस्थ कामोदकापीठ का आख्यान मैंने सुन लिया । अब कामाक्षापीठ का माहात्म्य सुनना चाहती हूं !

इस पर वसु ने कहा— हेभद्रे! ध्यान से सुनना, भारत के पूर्व की ओर समुद्र के तट पर सुन्दर वन में कामाक्षापीठ है। विशेष कर कलियुग में वहाँ पर सिद्धि मिलती हैं। विधिपूर्वक कोई साधक वहाँ जाकर कामाक्षा देवी की पूजा कर के एक रात्रि निवास करे तो देवी उसे दर्शन देती है, किन्तु संयमी-दृढ़ासन-निर्भीक होना आवश्यक है! देवी भयङ्कर रूप धर कर आती है; उसे देख कर यदि भयभीत न हुआ तो वाञ्छित सिद्धि मिलती है। भय खा गया तो विक्षिप्त हो जाता है। हेवरारने! वहाँ पर पार्वतीपुत्र सिद्धनाथ मत्स्येन्द्र उग्र तप करता है। वह सिद्धशिरोमणि योगबल से अदृश्य रहता है, उसे लोग नहीं देख सकते। सत्य-त्रेता-द्वापर, इन तीनों युगों में सब लोग उस के प्रत्यक्ष दर्शन पाते हैं। कलियुग के प्रथम चरण के अंत पर्यन्त वह गुप्त रहता है। कलिप्रथमचरण के बीतने पर जब धरातल पाप से पूर्ण हो जाता है तब पार्वतीपुत्र मत्स्येन्द्रनाथ प्रकट होकर सम्पूर्ण लोगों को धर्म का अनुशासन करता है। मोहनादि उपायों से अधार्मिक म्लेच्छप्राय मनुष्यों को वश में करके कलि के तीन पादों को बिताता है। हे महाभागे यदि कोई साधक वहाँ जाकर कामाक्षा की नित्य पूजा करते हुए उस

सिद्धेश्वर उमासुत नित्यनाथ का भक्तिभाव से एक वर्षमात्र विधिपूर्वक ध्यान करे तो साधक में स्वप्न हैं दर्शन मिलते हैं, वाञ्छित वर देकर सिद्धराज अन्तर्धान हो जाता है। प्रबोध होनें पर समाहितचित्तवाला साधक तत्काल सिद्धि प्राप्त करलेता है हे शुभे ! वह साधक सिद्ध होकर लोगों की मनोकामनाओं को पूर्ण करता हुआ अप्रतिहत गति से त्रैलोक्य में सर्वत्र विहार करता है और जो वस्तु चाहता है, उसे तत्काल ही उमापुत्र के वरप्रताप से प्राप्त कर लेता है। उस के लिए दुर्लभ कुछ भी नहीं। वह योगिराज मत्स्यनाथ सम्पूर्ण ज्ञानविज्ञान का समुद्र है; हेभद्रे ! लोकों की अभीष्ट सिद्धि करता हुआ अकुण्ठितगति सर्वत्र ब्रह्माण्ड में विचरण करता है। उग्र तपस्वी उस योगिवर को कोई नहीं देखपाता ! हेशुभे ! पूर्वकल्प में अनेकों युगों तक अनन्त ब्रह्माण्डों में कामगति से भ्रमण कर महाप्रतापी मीननाथ अब प्रशान्त कामाख्यापीठ में योगसमाधि स्थित है। उसे कालवेग बाधित नहीं करता। हेसुभद्रे ! इस नित्यनाथ की हम तुम्हें जन्मकथा सुनाते हैं सुनो; पुराकल्प की बात है, पुष्कर द्वीप में किसी ब्राह्मण के घर गण्डान्तयोग में बालक जन्मा; पिता दैवज्ञ था ! ब्राह्मणी से कहने लगा— 'इस कुल के प्रतिकूल बालक को

वरुणालय में डाल दो ! कुलदीपक पुत्ररत्न माता को कितना प्रिय होता है ! साथ ही प्रतिव्रता के लिए पतिदेव की आज्ञा भी अविचारणीय थी । जैसे तैसे हृदय पर शिला रख कर माता ने पुत्र को क्षीरसागर की भेंट कर दिया। क्षिप्तमात्र उस बालक को लाल लाल गूलर का फल जान कर किसी तिमिङ्गिल ने निगल लिया ! विधि का विधान बलवान् है ! पूर्वजन्म का कोई योग भ्रष्ट बालक था, न मरा ! वह ज्ञाति स्मर कई युगों तक उसी मछली के गर्भगुहा में रह कर कालगति से अजरामराङ्ग हो गया । हे मोहिनि ! अब इधर की बातें सुनो, कैलास में जाड़े के मारे निन्द्रा तो आती नहीं, जगदम्बा पार्वतीरूपिणी चकोरी के मिष से भगवान् शिव का मुखचन्द्र सर्वलोको पकारिणी कथामृतवृष्टि करता रहता है ! ऐसे ही एक समय जगज्ज-ननी के आग्रह करने पर भगवान् देशकाल की अनुकूलता के लिए लोकालोक पर्वत पर गये । वहाँ देदीप्यमान मणिमय शैलशृङ्ग पर जाते ही तीन तालियाँ बजाईं, जिन से कोई भी जीव पास न रहा । प्रशान्तचित्त से सुखासन आसीन करने के अनन्तर शिवने जगदम्बा गौरी को सम्बोधित कर अत्यन्त रहस्यभूत निजस्वरूप प्रणव का व्याख्यान अमरकथा सुनाई । जिस में लोकमाता गौरी ने

अमरकथा का तत्त्व जान कर पतिदेव के चरणों में प्रणाम किया। इतने में इधर क्षीरसागर से वह मत्स्य जिस की उदरदरी में बैठा विप्रवटु साङ्गोपाङ्ग अमरकथा को सुन रहा था उछल कर शिव पार्वती के पास जा पहुंचा। वह अखिल बन्धनों से मुक्त तत्त्वसिद्ध द्विजबालक मत्स्य के मस्तक को विदीर्ण कर बाहर निकला और जगत्माता जगत्पिता के चरणों में गिर गया। दोनों ने उस के मस्तक पर वरद हस्त रक्खा। अन्तर्यामी भगवान् ने सब कुछ जानते हुए भी सरलचित्त बालक की मञ्जु वाणी सुनने के लिए मत्स्यगर्भ में वास करने आदि का कारण पूछा, बालक ने सम्पूर्ण वृत्तान्त यथार्थरूप से वर्णन कर दिया। यह सुन कर उमा महेश्वर अत्यन्त प्रसन्न हुए और परस्पर विमर्श कर अपना पुत्र बना लिया; माता ने वात्सल्य से पुत्र को उठा कर अङ्क में रख लिया बार बार उस का चुम्बन करने लगी। आशुतोष भगवान् ने भी मस्तक पर हाथ फेरते हुए उसे सूँघा गौरी ने कहा—'मेरा पुत्र समस्ततत्त्व को जानता है और सब सिद्धों का अधिपति होगा। मत्स्यकी कुक्षि में निवास किया है, इस लिए इस का नाम मत्स्यनाथ—मत्स्येन्द्रनाथ—मीननाथ आदि लोक में प्रसिद्ध होगा'। इस के अनन्तर भगवान् शङ्कर ने कहा—

'अब यह सर्वशक्तियुक्त होगया है। संसार का कृत्य या करता हुआ अपनी तथा हम दोनों माता पिता की कीर्ति का विस्तार करता हुआ अकुण्ठितगति वाला अपनी इच्छा से ब्रह्माण्ड में विचरण करे।' तब से यह अम्बिका पुत्र नित्यनाथ समस्त लोकों में स्वेच्छा से भ्रमण कर उस रस-योक्त कामाक्षापीठ में समाधि लगाये बैठा है। हेभद्रे! इस सिद्धनाथ मत्स्येन्द्र का ध्यान करने वाला साधक समग्र सिद्धि को प्राप्त कर लेता है इस में कोई सन्देह नहीं! पार्वतीपुत्र का सेवक अनवद्य विद्या को प्राप्त कर अपने वाक्प्रवाह में सम्पूर्ण पण्डितवर्ग को बहा देता है। इस मत्स्येन्द्रनाथ की जगत्पावनी कथा को जो विधिपूर्वक सुनता है, वहभी संसार मे सब सुखों को भोग कर अन्त मे गन्धर्व तथा अप्सराओं से गीयमान देवताओं से पूजित हो स्वर्ग में निवास करता है हेसुनेत्रे! यह समस्ततताप तथा पापों का नाश करने वाला श्रीसिद्धनाथ का चरित्र और कामाक्षादेवी का महात्म्य तुम्हें सुना दिया। भद्रे। अब क्या सुनना चाहती हो? ॥२७॥

ब्रह्मोवाच

एतस्मिन्नन्तरे तत्र क्षारिसागरमध्यतः।

उज्जहार विमानाग्रे। तेजोभाराभि पीडितः ॥१॥

उ[illegible]बाहुकृतिं कुर्वन् सान्निध्यं समुपागतः ।
[illegible]मत्स्योऽज्ञात[illegible]: सन्नि[illegible]नेऽनहकृतिः ॥२॥

हुं [illegible]गर्भं मत्स्यं च दृष्ट्वा तं स महेश्वरः ।
तेजसा [illegible]म्भयामास वाक्य[illegible]तदुवाच ह ॥३॥

कस्त्वं ? मत्स्योदरस्थश्च देवोयक्षोऽथ मानुषः ?।
कथं जीवसि ? देह[illegible]गो मम वद प्रभो ! ॥४॥

मत्स्य उवाच—अहं मत्स्योदरे क्षिप्तः समुद्रे क्षीरसम्भवे ।
[illegible]लु पितृवाक्येन 'नायंमम कुला[illegible]तः' ॥५॥

कु[illegible] यभयात्तेन जातं स्वकुलना[illegible]नम् ।
[illegible]योगजनितो बालो न गृहकर्मकृत् ॥६॥

इति मात्रा दुःखितया निरस्तः श्रेष्ठवंशजः ।
मत्स्येनापि गृहीतोऽस्मि कालो मेऽत्र महानभूत् ॥७॥

तव वाक्यामृतैरेभि ज्ञानयोगो महानभूत ।
तेन त्वं सकलो ज्ञातो मयाऽमृतोऽथ मृतगः ॥८॥

अनुज्ञाँ मम देवेश ! देहि निष्क्रमणाय च ।
यथाते चरणौ ब्रह्मन् ! भवान्या अपि लक्षये ॥९॥

विज्ञोऽसि सुत रूपोऽसि पूज्योऽसि गुणवानसि ।
बहि र्निष्क्रम योगेन स्तम्भितोऽसि महभ्रमः ॥१०॥

ततोऽसौ शिरसा जातः उत्क्लेशान्मत्स्ययोजितः ।
ततो हि विद्रुतं वक्त्रं दत्वा द्वहिरुपागतः ॥११॥

रूपवान् प्रतिमायुक्तो मत्स्यगन्धेन संयुतः ।
सोमकान्तिसमस्तत्र ह्यभवद् दिव्यगन्धभाक् ॥१२॥

उमापि प्रणतं चामुं सुतं सोत्सङ्गभाजनम् ।
चकार तस्य नामापि हरः परमहर्षितः ॥ १३ ॥

यस्मान्मत्स्योदराज्जातो योगिनां प्रवरो ह्ययम् ।
तस्मात्तु मत्स्यनाथेति लोके ख्यातो भविष्यति ॥ १४ ॥

अच्छेद्यः स्यान्मत्तनुर्ज्ञानयोगस्यपारगः ।
निर्मत्सरोऽपि निर्द्वन्द्वो निराशो ब्रह्मसेवकः ॥ १५ ॥

जीवन्मुक्तश्च भविता भुवनानि चतुर्दश ।
इत्युक्तश्च महेशानं प्रणामश्च पुनः पुनः ॥ १६ ॥

महेश्वरेण सहितो मन्दराचलमाययौ ।

ब्रह्मोवाच

एवं सा परमां सिद्धिं प्रणवस्य प्रभावजाम् ।
सम्प्राप्य जगतां मातामुमुदे ससुता तदा ॥ १७ ॥

कृत्वा प्रदक्षिणं देवीं स्कन्दमालिङ्ग्य सोऽगमत् ।
ततः सा पार्वती हृष्टा प्राप्य ज्ञानमनुत्तमम् ॥ १८ ॥

इमां मत्स्येन्द्रनाथस्य समुत्पत्तिं शृणोति यः।
चातुर्मास्ये विशेषेण सोऽश्वमेधफलं लभेत् ॥ १९ ॥

इति स्कं पु ६ ना. ख. ब्र ना. स चा. मा.
मत्स्येन्द्रनाथोत्पत्तिवर्णनं नाम २६३ अध्यायः

ब्रह्मा जी ने कहा—हे नारद! भगवान् शङ्कर के मुख से जगदम्बा पार्वती ने अखिल अमरकथा सुन कर भगवान् को प्रणाम किया। इतने में एक अज्ञातपूर्व महामत्स्य अलौकिक तेज के भार से पीडित होकर क्षीरसागर के गर्भ से निकला और छाती से हाथ पाँव का काम लेता हुआ सरका कर गौरीशङ्कर के पास आया। कथा के समय भी हुङ्कार शब्द आरहा था; अब सम्मुख आये हुए हुंकार गर्भ मत्स्य को देख कर भगवान् ने अपने तेज से उसे स्तम्भित कर दिया और कहने लगे—हेमत्स्योदर में निवास करने वाले! तुम कौन हो? देव हो? या यक्ष हो? या मनुष्य हो? इस मछली की कुक्षि में कैसे जीते हो? कोई सामर्थ्यशाली प्रतीत होते हो! समस्त वृत्तान्त कहो।

इस पर उस मत्स्योदर बालक ने उत्तर दिया—हे भक्तवत्सल, मैं गण्डान्तयोग में उत्पन्न हुआ विप्रबालक हूं। कुलक्षय के भय से पिता ने कठोर आज्ञा देदी, पति

की आज्ञा मान कर माता ने भी दुःखित चित्त से मुझे क्षीरसागर में डाल दिया। दैवसंयोग से यह मछली मुझे निगल गई। इस के गर्भ में वास करते हुए मुझे बहुत समय बीत गया है। हे उमानाथ! आप की अनुकम्पा से आज मेरा भाग्योदय हुआ; आप के मुखारविन्द से यह महान् ज्ञानयोग रूपी अमृत मिला। अष्टमूर्ते! आप के इस अमर योगदीप से मैंने आप के सकल साकार रूप को जान लिया और हेसदाशिव! परम ज्योतिर्मय सच्चिदानन्द रूप को भी आपकी दृष्टिशक्ति पात से जान गया। हे आशुतोष! अब आज्ञा दीजिये जिस से बाहर आकर आप दोनों माता पिता के चरण कमलों का दर्शन करूँ।

यह सुन कर भक्तकल्पद्रुम भगवान् कैलासनाथ कहने लगे—हेवत्स! तुम विप्र के, पुत्र हो, जगत्पूज्य हो, और महायोगी सर्वगुणाकर हो, इस महामत्स्य को हम ने स्तम्भित कर दिया है, तुम शीघ्र बाहर आओ, ! इतना कहते ही उस विशालकाय तिमिङ्गिल का मुख विवृत हुआ और मस्तक फट गया। उस मार्ग से वह बालक मानों संसार को दशमद्वार से निकलने की प्रक्रिया का उपदेश सा करता हुआ निकला। सत्सन्निधान के प्रसाद से मत्स्य की उत्तम गति हुई। प्रायः सङ्ग का रङ्ग चढ़ता है, उस

भव्य किन्तु मत्स्यगन्धयुक्त मत्स्योदर बालक ने जगन्माता तथा जगत्पिता के चरणों में मस्तक रक्खा। मलयाचल में जन्म लेने वाले वृक्षों के लिए पक्षपात नहीं है। शरणागतवत्सला भवानी तथा भवकी वात्सल्यमयी दृष्टि उस पर पड़ी, तत्काल वह बालक कलानाथ चन्द्रमा के समान कान्तिवाला तथा दिव्यगन्ध युक्त होगया। 'स्वभावो दुरतिक्रमः!' पार्वती को पराये पुत्रों पर अधिकार करने का अधिक व्यसन है। जगज्जननी ने 'पुत्र!' कह कर चरणों में पड़े हुए बालक को उठा कर गोद में रख लिया। वात्सल्यमयी माता के लोचनों से काली काली दो धारायें तथा पयोधरों से सुधाधवल दो धारायें एक साथ बालक के मण्डलाकृति मस्तक पर गिरीं। मानों दो गङ्गा और दो यमुनाओं ने मिल कर उस शिशु को 'पार्वतीपुत्र' के पद पर अभिषिक्त कर दिया! बार बार मस्तक सूँघ कर तथा हृदय से लगा कर शिवा और शिव को उस समय स्कन्द और गजानन के आलिङ्गन करने का आनन्द मिला। फिर प्रसन्नता पूर्वक शशिशेखर भगवान् ने पुत्र का नामकरण संस्कार किया, पार्वती से कहने लगे—प्रिये! तुम्हारा कामरूप पुत्र सब प्रकार से पूर्ण है, अनेक रूप धारण कर यह चतुर्दश भुवनों में स्वच्छन्द भ्रमण करेगा। इसे कोई

किसी साधन से किसी प्रकार का कष्ट नदे सकेगा। यह निर्मत्सर-निर्द्वन्द्व-निराश्रय-निस्पृह-जीवन्मुक्त-ब्रह्मज्ञानी-सर्वविद्यानिधि-महाज्ञानयोगी है। मत्स्योदर से निकला है। इस लिए इसका नाम 'मत्स्यनाथ-मत्स्येन्द्रनाथ' आदि संसार में विख्यात होगा! हेनारद! संसार का नियम है कि 'जिस के अधिक काम, उसके अधिक नाम' मत्स्येन्द्र नाथ का उमापुत्र-पार्वतीपुत्र-शिवसुत-नित्यनाथ-नित्या-नन्द-सिद्धनाथ-सिद्धेश-सिद्धराज-आदि नाम उस के बनाये हुए मन्त्र-तन्त्र-आयुर्वेद-योगादिविषक ग्रन्थों में वर्तमान में कुछ विद्यमान हैं। इस प्रकार कुछ काल वहाँ रहकर भगवान् शिव पार्वती और पुत्र के साथ मन्दराचल को चले आये। भगवान् के मुख से अमरकथा सुन कर पुत्रसहित पार्वती अतिप्रसन्न हुई। मत्स्येन्द्रनाथ मन्दराचल में दोनों भाइयों से मिल कर बड़ा हर्षित हुआ। हेनारद! तीनों भाई वन में मृगपक्षियों से खेलते हुए माता पिता के आनन्द को द्विगुणित करने लगे। इस प्रकार कुछ काल आनन्द पूर्वक वहाँ पर निवास कर माता-पिता की आज्ञाले उनकी परिक्रमा लगा प्रणाम कर आशीर्वादले दोनों भाइयों से गले मिल लोक कल्याण के लिए मत्स्येन्द्रनाथ चला गया।

हे देवर्षे ! इस मत्स्येन्द्रनाथ की उत्पत्ति को जो भक्ति पूर्वक सुनेगा, उसे अश्वमेधयज्ञ का फल मिलेगा। विशेष कर चातुर्मास में इसका माहात्म्य है ॥१६॥

श्रीमन्नवलशिष्येण नेमिनाथेन योगिना।
अविस्तरानुवादोऽयं शास्त्रेभ्यः सङ्ग्रहः कृतः ॥१॥

नमो मन्दारवासाय वासिने सर्वयोगिनाम्।
योगिगन्याय योग्याय योगिनां पतये नमः ॥ १ ॥

महाकालाय कालाय कालनाथाय ते नमः।
संसारज्ञानरूपाय ज्ञाननाथाय ते नमः ॥ २ ॥

नमो मत्स्यस्वरूपाय योगरूपाय ते नमः।
नमः कैलासनाथाय कालनाथाय ते नमः ॥ ३ ॥

नमो योगिस्वरूपाय योगिनां पतये नमः।
नमो योगिप्रकाशाय योगिगम्याय ते नमः ॥ ४ ॥

नमो विमलनेत्राय योगिनेत्राय ते नमः।
नम ऋद्धिप्रकाशाय सिद्धिदाय नमो नमः ॥ ५ ॥

नमो माङ्गल्यनाथाय शिवनाथाय ते नमः।
नमो योगिस्वरूपाय क्रूररूपाय ते नमः ॥ ६ ॥

नमो यशोदानाथाय कामनाथाय ते नमः।
नमो विनोदनाथाय सिद्धिनाथाय ते नमः ॥ ७ ॥

नमो नाथाय नाथाय ज्ञाननाथाय ते नमः ।
नमः शङ्करनाथाय जयनाथाय ते नमः ॥ ८ ॥

नमो मुद्गलनाथाय नीलनाथाय ते नमः ।
नमो बालकनाथाय धर्मनाथाय ते नमः ॥ ९ ॥

विश्वनाथाय नाथाय कार्यनाथाय ते नमः ।
नमो भैरवनाथाय महानाथाय ते नमः ॥ १० ॥

नमो ब्रह्मसनाथाय योगनाथाय ते नमः ।
नमो विश्वविहाराय विश्वभाराय ते नमः ॥ ११ ॥

नमो रङ्गसनाथाय रङ्गनाथाय ते नमः ।
नमो मोक्षसनाथाय भैरवाय नमो नमः ॥ १२ ॥

नमो गोरक्षनाथाय गोरक्षाय नमो नमः ।
नमो मन्दारनाथाय नन्दनाथाय ते नमः ॥ १३ ॥

नमो मङ्गलनाथाय चम्पानाथाय ते नमः ।
नमः सन्तोषनाथाय सत्यनाथाय ते नमः ॥ १४ ॥

नमो निर्धननाथाय सुखनाथाय ते नमः ।
नमः कारुण्यनाथाय भैरवाय नमो नमः ॥ १५ ॥

नमो द्रविडनाथाय दरिद्रनाथाय ते नमः ।
नमः संसारनाथाय जगन्नाथाय ते नमः ॥ १६ ॥

नमो माध्वीकनाथाय मन्त्रनाथाय ते नमः ।
नमो ज्ञानसनाथाय ध्याननाथाय ते नमः ॥ १७ ॥

नमो गोकर्णनाथाय महानाथाय ते नमः ।
नमः शुभ्रसनाथाय भैरवाय नमो नमः ॥ १८ ॥

नमो मण्डलनाथाय कुण्डलाय नमो नमः ।
नमः सरोजनाथाय मत्स्यनाथाय ते नमः ॥ १९ ॥

नमो भक्तसनाथाय भक्तिनाथाय ते नमः ।
नमो मोहननाथाय सत्सनाथाय ते नमः ॥ २० ॥

नमो मातृसनाथाय विश्वनाथाय ते नमः ।
नमो बिन्दुसनाथाय जयनाथाय ते नमः ॥ २१ ॥

नमो मङ्गलनाथाय धर्मनाथाय ते नमः ।
नमो गङ्गासनाथाय भूमिनाथाय ते नमः ॥ २२ ॥

नमो धीरसनाथाय बिन्दुनाथाय ते नमः ।
नमः कञ्चुकिनाथाय शृङ्गिनाथाय ते नमः ॥ २३ ॥

नमः समुद्रनाथाय शैलनाथाय ते नमः ।
नमो माङ्गल्यनाथाय कद्रुनाथाय ते नमः ॥ २४ ॥

नमो वेदान्तनाथाय ओंनाथाय नमो नमः ।
नमो ब्रह्माण्डनाथाय भैरवाय नमो नमः ॥ २५ ॥

नमो गिरिशनाथाय वामनाथाय ते नमः ।
नमो बीजसनाथाय भैरवाय नमो नमः ॥ २६ ॥
नमो मन्दिरनाथाय मदनाथाय ते नमः ।
नमो भैरवीनाथाय भैरवाय नमो नमः ॥ २७ ॥
अम्बानाथाय नाथाय जन्तुनाथाय ते नमः ।
नमः कालिसनाथाय भैरवाय नमो नमः ॥ २८ ॥
नमो मुकुन्दनाथाय कुन्दनाथाय ते नमः ।
नमः कुण्डलनाथाय भैरवाय नमो नमः ॥ २९ ॥
नमो ऽष्टचक्रनाथाय चक्रनाथाय ते नमः ।
नमो विभूतिनाथाय शूलनाथाय ते नमः ॥ ३० ॥
नमो न्यायसनाथाय न्यायनाथाय ते नमः ।
नमो दयासनाथाय चलनाथाय ते नमः ॥ ३१ ॥
नमो विशदनाथाय जगन्नाथाय ते नमः ।
नमः कामिकनाथाय भैरवाय नमो नमः ॥ ३२ ॥
नमः क्षेत्रसनाथाय जीवनाथाय ते नमः ।
नम श्चेलङ्कनाथाय चैलनाथाय ते नमः ॥ ३३ ॥
नमो मात्रासनाथाय अमात्राय नमो नमः ।
नमो द्वन्द्वसनाथाय भैरवाय नमो नमः ॥ ३४ ॥
नमः शूरसनाथाय शूरनाथाय ते नमः ।
नमः सौजन्यनाथाय सौजन्याय नमो नमः ॥ ३५ ॥

नमो दुष्टसनाथाय भैरवाय नमो नमः ।
नमो भयसनाथाय विघ्ननाथाय ते नमः ॥ ३६ ॥

नमो मायासनाथाय भैरवाय नमो नमः ।
नमो विटङ्कनाथाय टङ्कनाथाय ते नमः ॥ ३७ ॥

नमः श्रमसनाथाय खड्गनाथाय ते नमः ।
नमः शक्तिसनाथाय धनुर्नाथाय ते नमः ॥ ३८ ॥

नमो बाणसनाथाय शापनाथाय ते नमः ।
नमो यन्त्रसनाथाय भैरवाय नमो नमः ॥ ३९ ॥

नमो गण्डसनाथाय गण्डपाय नमो नमः ।
नमो डाकिनिनाथाय भैरवाय नमो नमः ॥ ४० ॥

नमो डामरनाथाय डारकाय नमो नमः ।
नमो डङ्कसनाथाय डङ्कनाथाय ते नमः ॥ ४१ ॥

नमो माण्डव्यनाथाय यज्ञनाथाय ते नमः ।
नमो यजुःसनाथाय ऋचानाथाय ते नमः ॥ ४२ ॥

नमः सामसनाथायाथर्वनाथाय ते नमः ।
नमःशून्यायनाथाय स्वर्गनाथाय ते नमः ॥ ४३ ॥

विश्वामित्रयोगप्रियो विश्वामित्रनुतिप्रियः ।
विश्वामित्रपरिज्ञाता विश्वामित्रोगत्तमः ॥ ४४ ॥

जालन्धरो जनाराध्यो जनाध्यक्षो जनप्रियः ।
जीवहा जीवदो जन्तु जीवनाथो जलेश्वरः ॥ ४५ ॥
सर्वतो रक्ष रक्षेति यक्षयक्षेति भैरव ! ।
नाथ ! नाथ ! पदं प्रोक्त्वा फडन्तोऽयं महामनुः ॥ ४६ ॥
इदं स्तोत्रं च रुद्रेण रामस्य वदनेऽर्पितम् ।
तन्मुखाद्विश्रुतं लोके दारिद्रस्य च बाधकम् ॥ ४७ ॥
रामेण कथितं भ्रात्रे लक्ष्मणाय महात्मने ।
ततो दुर्वाससे प्राप्तं तेनैवोक्तं तु पाण्डवे ॥ ४८ ॥
पाण्डवोऽप्यब्रवीत् कृष्ण कृष्णेनेह प्रकीर्तितम् ।
अस्य स्तोत्रस्य माहात्म्यं रामो जानाति तत्वतः ॥ ४९ ॥
रामोऽपि राज्यं सम्प्राप्तो ह्यस्य स्तोत्रस्य पाठतः ।
पाण्डवोऽपि तथा राज्यं सम्प्राप्तो भैरवस्य च ॥ ५० ॥
अनेन स्तोत्रपाठेन किमलभ्यं भवेद् भुवि ? ।
सर्वलोकस्य पूज्य स्तु जायते नात्र संशयः ॥ ५१ ॥
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
पुत्रार्थी लभते पुत्रान् योगार्थी योगभाग्भवेत् ॥ ५२ ॥

इति श्रीबृहज्ज्योतिषार्णवे धर्मस्कन्ध उपासनास्तव
के श्रीवटुकभैरवोपासना ।

संग्रहकर्ता—
श्रीयोगिराजनवलनाथशिष्य यो. नेमिनाथः विक्रमनहारे

